॥ श्रीसीतारामचन्द्राभ्यां नमः ॥
॥ श्रीमते रामानन्दाचार्याय नमः ॥
॥ श्रीमद्गोस्वामितुलसीदासाय नमः ॥

# अद्भुत रामायणे
# ॥ सीताराम परम तत्त्व वर्णन ॥

*This text has been prepared by Vishal Pandey (B.Tech IIT Kanpur) with the blessings of* ***Chitrakūṭa Tulasīpīṭhādhiśvara Jagadguru Rāmānandāchārya Śrī Svāmī Rāmabhadrāchārya***

सीतानाथ समारम्भां रामानन्दार्य मध्यमाम् ।
अस्मदाचार्य पर्यन्तां वन्दे श्री गुरु परम्पराम् ॥

तमसातीरनिलयं निलयं तपसां गुरुम् ।
वचसां प्रथमस्थानं वाल्मीकिं मुनिपुंगवम् ॥ १ ॥

विनयावनतो भूत्वा भरद्वाजो महामुनिः ।
अपृच्छत्संमतः शिष्यः कृतांजलिपुटो वशी ॥ २ ॥

रामायणमिति ख्यातं शतकोटिप्रविस्तरम् ।
प्रणीतं भवता यच्च ब्रह्मलोके प्रतिष्ठितम् ॥ ३ ॥

श्रूयते ब्राह्मणैर्नित्यमृषिभिः पितृभिः सुरैः ।
पंचविंशतिसाहस्रं रामायणमिदं भुविः ॥ ४ ॥

तदाकर्णितमस्माभिः सविशेषं महामुने ।
शतकोटिप्रविस्तारे रामायणमहार्णवे ॥ ५ ॥

किं गीतमिह मुष्णाति तन्मे कथय सुव्रत ।
आकर्ष्यादरिणः पृष्टं भरद्वाजस्य वै मुनिः ॥ ६ ॥

हस्तामलकवत्सर्वं सस्मार शतकोटिकम् ।
ओमित्युक्त्वा मुनिः शिष्यं प्रोवाच वदतां वरम् ॥ ७ ॥

भरद्वाज चिरं जीव साधु स्मारितमद्य नः ।
शतकोटिप्रविस्तारे रामायणमहार्णवे ॥ ८ ॥

रामस्य चरितं सर्वमाश्चर्यं सम्यगीरितम् ।
पंचविंशतिसाहस्रं नृलोके यत्प्रतिष्ठितम् ॥ ९ ॥

नृणां हि सदृशं रामचरितं वर्णितं ततः ।
सीतामाहात्म्यसारं यद्विशेषादत्र नोक्तवान् ॥ १० ॥

श्रृणुष्वावाहितो ब्रह्मन्काकुत्स्थचरितं महत् ।
सीताया मूलभूतायाः प्रकृतेश्चरितं महत् ॥ ११ ॥

आश्चर्यमाश्चर्यमिदं गोपितं ब्रह्मणो गृहे ।
हिताय प्रियशिष्याय तुभ्यमावेदयामि तत् ॥ १२ ॥

जानकी प्रकृतिः सृष्टेरादिभूता महागुणा ।
तपःसिद्धिः स्वर्गसिद्धिर्भूतिर्भूतिमती सती ॥ १३ ॥

विद्याविद्या च महती गीयते ब्रह्मवादिभिः।
ऋद्धिः सिद्धिर्गुणमयी गुणातीता गुणात्मिका॥ १४॥

ब्रह्मब्रह्मांडसंभूता सर्वकारणकारणम्।
प्रकृतिर्विकृतिदेवी चिन्मयी चिद्विलासिनी॥ १५॥

महाकुण्डलिनी सर्वानुस्यूता ब्रह्मसंज्ञिता।
यस्या विलसितं सर्वं जगदेतंच्चराचरम्॥ १६॥

यामाधाय हृदि ब्रह्मन्योगिनस्तत्त्वदर्शिनः।
विघट्टयंति हृद्ग्रंथिं भवंति सुख मूर्तिकाः॥ १७॥

यदा यदा हि धर्मस्य ग्लानिर्भवति सुव्रत।
अभ्युत्थानमधर्मस्य तदा प्रकृति संभवः॥ १८॥

रामः साक्षात्परं ज्योतिः परं धाम परः पुमान्॥
आकृतौ परमो भेदो न सीतारामयोर्यतः॥ १९॥

रामः सीता जानकी रामभद्रो नाणुर्भेदो नैतयोरस्ति कश्चित्।
सन्तो बुद्ध्वा तत्त्वमेतद्विबुद्धाः पारं याताः संसृतेर्मृत्युवक्रात्॥ २०॥

रामोऽचिंत्यो नित्यचित्सर्वसाक्षी सर्वांतः स्थः सर्वलोकैककर्ता।
भर्ता हर्तानंदमूर्तिर्विभूमा सीतायोगांच्चित्यते योगिभिःसः॥ २१॥

अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स श्रृणोत्यकर्णः।
स वेत्ति विश्वं नहि तस्य वेत्ता तमाहुरन्यं पुरुषं पुराणम्॥ २२॥

तयोः परं जन्म उदाहरिष्ये ययोर्यथाकारणदेहधारिणोः।
अरूपिणो रूपविधारणं पुनर्नृणां महानुग्रह एव केवलम्॥ २३॥

पठन् द्विजो वागृषभत्वमीयात्क्षत्रान्वयो भूमिपतित्वमीयात्।
वणिग्जनः पण्यफलत्वमीयाच्छृण्वन्हि शूद्रोहि महत्त्वमीयात्॥ २४॥

# इत्यार्षे श्रीमद्रामायणेवाल्मीकीये अद्भुतोत्तरकाण्डे आदिकाव्येप्रथमसर्गः।